समानं। ऊं इति। त्यं। पुरुऽहूतं। उक्थ्यं। रथं। त्रिऽचक्रं। सवना। गनिग्मतं।
परिऽज्मानं। विदथ्यं। सुवृक्तिऽभिः। वयं। विऽउष्टौ। उषसः। हवामहे ॥१॥

हे अश्विनौ युवयोः समानमु साधारणमेव त्यं तं पुरुहूतं बहुभिराहूतमुक्थ्यं प्रशस्यं त्रिचक्रं सवना सवनानि यज्ञान्गनिग्मतं प्रतिगच्छंतं परिज्मानं परितो गंतारं विदथ्यं यज्ञहितं रथमुषसो व्युष्टौ सुवृक्तिभिः सुष्ठु दोषवर्जिताभिः स्तुतिभिर्वयं हवामहे। आह्वयामः ॥

॥ अथ द्वितीया ॥

प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथं।
विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमंतमश्विना ॥२॥

प्रातःऽयुजं। नासत्या। अधि। तिष्ठथः। प्रातःऽयावानं। मधुऽवाहनं। रथं।
विशः। येन। गच्छथः। यज्वरीः। नरा। कीरेः। चित्। यज्ञं। होतृऽमंतं। अश्विना ॥२॥

हे नासत्या नासत्यभूतौ सत्यस्य प्रणेतारौ वा नरा नेतारावश्विनौ युवां प्रातर्युजं प्रातःकालेऽश्वैर्युज्यमानं प्रातर्यावाणं प्रातर्गंतारं मधुवाहनं मधुनोऽमृतस्य वाहकं तं रथमधि तिष्ठथः। आरोहतमित्यर्थः। यज्वरीर्यजनशीला विशः प्रजा येन रथेन गच्छथः। येन च कीरेश्चित्स्तोतुरपि होतृमंतमृषियुक्तं यज्ञं गच्छथः ॥

॥ अथ तृतीया ॥

अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसं।
विप्रस्य वा यत्सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना ॥३॥

अध्वर्युं। वा। मधुऽपाणिं। सुऽहस्त्यं। अग्निधं। वा। धृतऽदक्षं। दमूनसं।
विप्रस्य। वा। यत्। सवनानि। गच्छथः। अतः। आ। यातं। मधुऽपेयं। अश्विना ॥३॥

हे अश्विनौ युवां मधुपाणिं सोमपाणिमध्वर्युं वा सुहस्त्यं सुहस्त्यनामानमृषिं मां धृतदक्षं धृतबलं दमूनसं दानमनसमग्निधं वर्त्विग्विशेषं समायातं। तदेव दर्शयति। यद्यद्यपि विप्रस्यान्यस्य मेधाविनः सवनानि यज्ञान्गच्छथस्तथाप्यतस्तेभ्यो यज्ञेभ्यो मधुपेयमस्माकं सोमात्मकं पेयमा यातं। अन्वागच्छतं ॥

॥ इति सप्तमस्याष्टम एकविंशो वर्गः ॥

अस्तेवेत्येकादशर्चं त्रयोदशं सूक्तमांगिरसस्य कृष्णाख्यस्यार्षं त्रैष्टुभमैंद्रं। अनुक्रांतं च। अस्तेवैकादश कृष्ण इति॥ आभिप्लविकेषूक्थ्येषु स्तोमवृद्धाविदं सूक्तं ब्राह्मणाच्छंसिन आवापार्थं। सूचितं च। यज्ञे दिव इति सूक्ते अस्तेव सु प्रतरं। आ० ७.९.। इति॥

॥ तत्र प्रथमा॥

अस्तेव सु प्रतरं लायमस्यन्भूषन्निव प्र भरा स्तोममस्मै।

वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम इंद्रं॥१॥

अस्ताऽइव। सु। प्रऽतरं। लायं। अस्यन्। भूषन्ऽइव। प्र। भर। स्तोमं। अस्मै।

वाचा। विप्राः। तरत। वाचं। अर्यः। नि। रमय। जरितरिति। सोमे। इंद्रं॥१॥

प्रतरं प्रवृद्धतरं लायं संश्लेषणं हृदयवेधिनं शरं सु सुष्ठ्वस्यन् क्षिपन् अस्तेव यथा क्षेप्ता धानुष्को भूषन्निव यथा चालंकारमलंकुर्वन्नलंकर्ता तद्वत्स्तोममस्मा इंद्राय प्र भर। प्रापय। हे अंतरात्मन् त्वमिति शेषः। किंच। हे विप्रा मेधाविनो यूयं वाचा स्तुत्यार्योऽरेः शत्रोर्वाचं तरत। नितरां तरत। निराकुरुतेत्यर्थः। हे जरितः स्तोतस्त्वं सोमे सोमयाग इंद्रं नि रमय। क्रीडय॥

॥ अथ द्वितीया॥

दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिंद्रं।

कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरं॥२॥

दोहेन। गां। उप। शिक्ष। सखायं। प्र। बोधय। जरितः। जारं। इंद्रं।

कोशं। न। पूर्णं। वसुना। निऽऋष्टं। आ। च्यवय। मघऽदेयाय। शूरं॥२॥

हे जरितस्त्वं दोहेन कामानां दोहनार्थं गां गोरूपं सखायं प्रियमिंद्रमुप शिक्ष। वशं नय। किंच। जारं भूतानां जरयितारमिंद्रं प्र बोधय। स्तुतिभिः प्रबुद्धं कुरु। किंच। पूर्णमुदकेन पूरितं कोशं न पात्रमिव वसुना हिरण्यादिना धनेन न्यृष्टं नीचैर्गतं शूरं वीरमिंद्रं मघदेयाय धनदानाया च्यवय। अभिमुखं कुर्वित्यर्थः॥

॥ अथ तृतीया॥

किमंग त्वा मघवन्भोजमाहुः शिशीहि मा शिशयं त्वा शृणोमि।

अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिंद्रा भरा नः॥३॥

किं । अंग । त्वा । मघऽवन् । भोजं । आहुः । शिशीहि । मा । शिशयं । त्वा । शृणोमि ।
अप्नस्वती । मम । धीः । अस्तु । शक्र । वसुऽविदं । भगं । इंद्र । आ । भर । नः ॥ ३ ॥

अंगेति सामान्याह्वानं । अंग हे मघवन् धनवन् शक्रेंद्र त्वा त्वां किं किमर्थं भोजं स्तोतॄणां भोजकमभीष्टमाहुः सर्वे विद्वांसः । यदि न ददासीत्यध्याहारः । तस्माद्दास्येव स्तोतृभ्यो धनानीत्यर्थः । तथा सति मा स्तोतारं शिशीहि । धनदानेन तीक्ष्णीकुरु । त्वा त्वां शिशयं स्तोतॄणां संस्कर्तारं शृणोमि । किंच । मम धीर्बुद्धिरप्नस्वती कर्मवत्यस्तु । भवतु । किंच नोऽस्माकं वसुविदं धनस्य लंभकं भगं भाग्यमा भर । आहर ॥

॥ अथ चतुर्थी ॥

त्वां जना ममसत्येष्विंद्र संतस्थाना वि ह्वयंते समीके ।
अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः ॥ ४ ॥

त्वां । जनाः । ममऽसत्येषु । इंद्र । संऽतस्थानाः । वि । ह्वयंते । संऽईके ।
अत्र । युजं । कृणुते । यः । हविष्मान् । न । असुन्वता । सख्यं । वष्टि । शूरः ॥ ४ ॥

हे इंद्र त्वां जना ममसत्येषु संग्रामेषु वि ह्वयंते । विविधमाह्वयंति साहाय्यार्थं । एतदेव दर्शयति । समीके युद्धे संतस्थानाः सह तिष्ठंतो जना वि ह्वयंत इति । अत्रास्मिन्नाह्वाने स शूरो वीर इंद्रस्तं युजं सखायं कृणुते कुरुते यो हविष्मान्भवति । असुन्वता सोमाभिषवमकुर्वता पुरुषेण सह सख्यं सखित्वं न वष्टि । न कामयते ॥

॥ अथ पंचमी ॥

धनं न स्यंद्रं बहुलं यो अस्मै तीव्रान्त्सोमाँ आसुनोति प्रयस्वान् ।
तस्मै शत्रून्त्सुतुकान्प्रातरह्नो नि स्वष्ट्रान्युवति हंति वृत्रं ॥ ५ ॥

धनं । न । स्यंद्रं । बहुलं । यः । अस्मै । तीव्रान् । सोमान् । आऽसुनोति । प्रयस्वान् ।
तस्मै । शत्रून् । सुऽतुकान् । प्रातः । अह्नः । नि । सुऽअष्ट्रान् । युवति । हंति । वृत्रं ॥ ५ ॥

प्रयस्वान् हविष्मान्यो यजमानः स्यंद्रं स्यंदनशीलं गवाश्वादिकं बहुलं प्रभूतं धनं न यथा धनं दरिद्राय पात्रभूताय दातुं संस्करोति तद्वदस्मा इंद्राय तीव्रान्तीव्ररसान्सोमानासुनोत्यभिषुणोति । अभिषवाख्येन संस्कारेण संस्करोतीत्यर्थः ।

तस्मै यजमानाय प्रातरह्नः पूर्वाह्णे सुतुकान्सुप्रेरणाञ्शोभनपुत्रसहितान्वा स्वष्ट्रांञ्शोभनायुधाञ्शत्रून् नि युवति । स इंद्रः पृथक्करोति । किंच । वृत्रं तदीयमुपद्रवं हंति । हिनस्ति ॥

॥ इति सप्तमस्याष्टमे द्वाविंशो वर्गः ॥

॥ अथ षष्ठी ॥

यस्मिन्वयं दधिमा शंसमिंद्रे यः शिश्राय मघवा काममस्मे ।

आराच्चित्सन्भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमंतां ॥६॥

यस्मिन् । वयं । दधिम । शंसं । इंद्रे । यः । शिश्राय । मघऽवा । कामं । अस्मे इति ।

आरात् । चित् । सन् । भयतां । अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमंतां ॥६॥

यस्मिन्निंद्रे वयं घौषेयाः सुहस्त्याः शंसं स्तुतिं दधिम विदध्मः । यश्च मघवान्धनवानिंद्रोऽस्मे अस्मासु काममभिलाषं शिश्राय श्राययति अस्येंद्रस्य शत्रुराराद्दूर एव संश्चित् सन्नपि भयतां । बिभेतु । किंचास्मा इंद्राय जन्या जन्यानि शत्रुजनपदभवानि द्युम्ना द्युम्नान्यन्नानि नि नमंतां । प्रह्वीभवंतु । भोजनीयानि भवंत्वित्यर्थः ॥

॥ अथ सप्तमी ॥

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शंबः पुरुहूत तेन ।

अस्मे धेहि यवमद्गोमदिंद्र कृधी धियं जरित्रे वाजरत्नां ॥७॥

आरात् । शत्रुं । अप । बाधस्व । दूरं । उग्रः । यः । शंबः । पुरुऽहूत । तेन ।

अस्मे इति । धेहि । यवऽमत् । गोऽमत् । इंद्र । कृधि । धियं । जरित्रे । वाजऽरत्नां ॥७॥

हे पुरुहूत बहुभिराहूतेंद्र तव य उग्र उद्गूर्णः शंबो वज्रः । तथा च यास्कः ॥ शंब इति वज्रनाम शमयतेर्वा शातयतेर्वा । नि॰ ५.२४. । इति । तेन वज्रेण शत्रुमस्मदरिमारादस्मत्समीपाद्दूरमप बाधस्व । त्वमपगमय । किंच । अस्मे अस्मासु यवमद्यवयुक्तं गोमद्गोयुक्तं च धनं धेहि । निधेहि । किंच । जरित्रे स्तोत्रे मह्यं वाजरत्नां रमणीयान्नं धियं कर्म कृधि । कुरु ॥

॥ अथाष्टमी ॥

प्र यमंतर्वृषसवासो अग्मन्तीव्राः सोमा बहुलांतास इंद्रं ।

नाह दामानं मघवा नि यंसन्नि सुन्वते वहति भूरि वामं ॥८॥

प्र । यं । अंतः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः । बहुलऽअंतासः । इंद्रं ।
न । अह । दामानं । मघऽवा । नि । यंसत् । नि । सुन्वते । वहति । भूरि । वामं ॥८॥

अंतर्जठरे यमिंद्रं वृषसवासो वृषसवा अग्नौ सोमस्य वर्षितृभिरध्वर्युभिरभिषुतास्तीव्रास्तीव्ररसा बहुलांतासो बहुलमन्नादिकमंते येभ्यस्ते बहुलांताः सोमाः प्राग्मन् प्रगच्छंति स मघवा धनवानिंद्रो दामानं दातारं यजमानं नाह नैव नि यंसत् । नियच्छति । किंतु सुन्वते सोमाभिषवं कुर्वते यजमानाय भूर्यधिकं वामं वननीयं धनं नि वहति । नितरां प्रापयति ॥

॥ अथ नवमी ॥

उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले ।
यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान् ॥९॥
उत । प्रऽहां । अतिऽदीव्या । जयाति । कृतं । यत् । श्वऽघ्नी । विऽचिनोति । काले ।
यः । देवऽकामः । न । धना । रुणद्धि । सं । इत् । तं । राया । सृजति । स्वधाऽवान् ॥९॥

उतापि चेंद्रः प्रहां प्रहंतारमतिदीव्य । अतिरभिपूजितार्थे वर्तते । दीव्यतिर्गत्यर्थे । अभिपूजितं गमयित्वा जयाति । जयति । किंच । यद्यथा । अत्र प्रकारवचनप्रत्ययस्य लोपो द्रष्टव्यः । श्वघ्नी कितवः कृतं कृतसमयं प्रतिकितवं कितवानां मध्ये विचिनोति परीक्ष्य गृह्णाति तद्वदिंद्रः काले युद्धकाले बलवंतं शत्रुं परीक्ष्य वधार्थं गृह्णातीत्यर्थः । किंच । यो मनुष्यो देवकामो देवान्यष्टुं स्तोतुं वाभिलाषवान्भवति तस्यार्थाय धना धनानि न रुणद्धि । नावृणोति । नाच्छादयतीत्यर्थः । किंतु स्वधावान्बलवानिंद्रस्तं देवकामं राया धनेन सं सृजति । संयोजयत्येव ॥

॥ अथ दशमी ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥
गोभिः । तरेम । अमतिं । दुःऽएवां । यवेन । क्षुधं । पुरुऽहूत । विश्वां ।
वयं । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥१०॥

हे पुरुहूत बहुभिराहूतेंद्र तव प्रसादाद्दुरेवां दुष्टागमनां दारिद्र्यादागताममतिं

दुर्बुद्धिं वयं घोषेयाः सुहस्त्या गोभिः पशुभिस्तरेम । निस्तरेम । किंच । यवेन विश्वां व्याप्तां क्षुधं तरेम । किंच । प्रथमा मुख्यानि धनानि राजभिर्धनानामीश्वरैः । लभेमहीति शेषः । यद्वा । प्रथमा वयमिति संबंधः । किंचास्माकेनास्मदीयेन वृजनेन बलेन जयेम । शत्रूनिति शेषः ॥

॥ अथैकादशी ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥११॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इंद्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥११॥

पश्चात्पश्चिमतो योऽघायुरागच्छति तस्मादघायोः पापकाच्चोर्नोऽस्मान्बृहस्पतिः परि पातु । रक्षतु । उतापि चोत्तरस्मादुत्तरतोऽधरादधस्ताच्च योऽघायुरागच्छति तस्मादघायोर्नोऽस्मान्परि पातु । उतापि चेंद्रः पुरस्तात्पूर्वतो मध्यतश्च योऽघायुरागच्छति तस्मादघायोर्नोऽस्मान्परि पातु । किंच । सखा सखिभूतेंद्रः सखिभ्यः प्रियेभ्योऽस्मभ्यं वरिवो धनं कृणोतु । करोतु ॥

॥ इति सप्तमस्याष्टमे त्रयोविंशो वर्गः ॥

॥ इति दशमे मंडले तृतीयोऽनुवाकः ॥

चतुर्थेऽनुवाकेऽष्टादश सूक्तानि । तत्राच्छा म इत्येकादशर्चं प्रथमं सूक्तं । दशम्येकादश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । पूर्ववदृषिदेवते । तथा चानुक्रांतं । अच्छा मे द्वित्रिष्टुबंतमिति । उक्थ्ये ब्राह्मणाच्छंसिनस्तृतीयसवन एतत्सूक्तं । सूचितं च । अच्छा म इंद्रं बृहस्पते युवमिंद्रश्च वस्व इति याज्ये । आ॰ ६.१. । इति ॥ षष्ठेऽहन्यपस्यैतत्सूक्तं । सूचितं च । अच्छा म इंद्रमिति नित्यमैकाहिकं । आ॰ ८.३. । इति ॥

॥ तत्र प्रथमा ॥

अच्छा म इंद्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजंते जनयो यथा पतिं मर्यं न शुंध्युं मघवानमूतये ॥१॥

अच्छ । मे । इंद्रं । मतयः । स्वःऽविदः । सध्रीचीः । विश्वाः । उशतीः । अनूषत ।
परि । स्वजंते । जनयः । यथा । पतिं । मर्यं । न । शुंध्युं । मघऽवानं । ऊतये ॥१॥

आंगिरसस्य कृष्णस्य मे मम स्वर्विदः सर्वस्य लंभयित्र्यः सध्रीचीः संगता विश्वा व्याप्ता उशतीः कामयमाना मतयः स्तुतय इंद्रमच्छानूषत । अभिष्टुवंति । किंच । जनयो जाया यथा पतिं भर्तारं मर्यं न यथा च मनुष्यं शुंध्युं शुद्धं दोषरहितं मघवानं धनवंतमूतये रक्षणार्थं परि ष्वजंत आलिंगंति तद्वदिंद्रं मे स्तुतयः परि ष्वजंते ॥

॥ अथ द्वितीया ॥

न घा त्वद्रिगप वेति मे मनस्त्वे इत्कामं पुरुहूत शिश्रय ।
राजेव दस्म नि षदोऽधि बर्हिष्यस्मिन्त्सु सोमेऽवपानमस्तु ते ॥२॥

न । घ । त्वद्रिक् । अप । वेति । मे । मनः । त्वे इति । इत् । कामं । पुरुऽहूत । शिश्रय ।
राजाऽइव । दस्म । नि । सदः । अधि । बर्हिषि । अस्मिन् । सु । सोमे । अवऽपानं ।
अस्तु । ते ॥२॥

हे पुरुहूत बहुभिराहूत दस्म दर्शनीयेंद्र त्वद्रिक् त्वदभिमुखं मे मदीयं मनो न घ न खल्वप वेति । त्वत्तोऽपगच्छति । किंच । त्वे इत् त्वय्येव काममभिलाषं शिश्रय । स्थापयामि । किंच । राजेवेश्वर इव बर्हिष्यधि नि षदः । निषीद । किंच । ते तवास्मिन्सोमेऽवपानमस्तु । भवतु ॥

॥ अथ तृतीया ॥

विषूवृदिंद्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते ।
तस्येदिमे प्रवणे सप्त सिंधवो वयो वर्धंति वृषभस्य शुष्मिणः ॥३॥

विषुऽवृत् । इंद्रः । अमतेः । उत । क्षुधः । सः । इत् । रायः । मघऽवा । वस्वः । ईशते ।
तस्य । इत् । इमे । प्रवणे । सप्त । सिंधवः । वयः । वर्धंति । वृषभस्य । शुष्मिणः ॥३॥

इंद्रोऽमतेरस्माकं दुर्बुद्धेः प्रज्ञापहारिण्याः पिपासाया वा विषूवृद्विष्वग्वर्तको भवतु । उतापि च । क्षुधो बुभुक्षाया विषूवृद्भवतु । किंच । स इत् स एव मघवा धनवानिंद्रो वस्वो वासयितू रायो धनस्येशते । ईष्टे । किंच । वृषभस्य वर्षितुस्तस्येदिंद्रस्यैवेमे प्रसिद्धाः सप्त सप्तसंख्याकाः सिंधवो नद्यः प्रवणे देशे वयोऽन्नं वर्धंति । वर्धयंति ॥

॥ अथ चतुर्थी ॥

वयो न वृक्षं सुपलाशमासदन्त्सोमास इंद्रं मंदिनश्चमूषदः ।
प्रैषामनीकं शवसा दविद्युतद्विदत्स्व१र्मनवे ज्योतिरार्यं ॥४॥

वयः । न । वृक्षं । सुऽपलाशं । आ । असदन् । सोमासः । इंद्रं । मंदिनः । चमूऽसदः ।
प्र । एषां । अनीकं । शवसा । दविद्युतत् । विदत् । स्वः । मनवे । ज्योतिः । आर्यं ॥४॥

वयो न यथा पक्षिणः सुपलाशं शोभनपर्णं वृक्षमासीदंति तद्वन्मंदिनो मदकराश्चमूषदश्चमसपात्रेषु स्थातारः सोमासः सोमा इंद्रमासदन् । आसीदंति । अधितिष्ठंतीत्यर्थः । एषामिंद्रमधितिष्ठतां सोमानां शवसा वेगेन युक्तमनीकमग्रं प्र दविद्युतत् । प्रद्योतते । किंचायमिंद्रः स्वः स्वात्मनार्यं प्रेर्यं ज्योतिरादित्याख्यं तेजो मनवे मनुष्येभ्यो विदत् । प्रयच्छतु ॥

॥ अथ पंचमी ॥

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥५॥

कृतं । न । श्वऽघ्नी । वि । चिनोति । देवने । संऽवर्गं । यत् । मघऽवा । सूर्यं । जयत् ।
न । तत् । ते । अन्यः । अनु । वीर्यं । शकत् । न । पुराणः । मघऽवन् । न । उत । नूतनः ॥५॥

श्वघ्नी परस्वानां हंता कितवो देवने द्यूते कृतं न यथा कृतं वि चिनोति तद्वदिंद्रः सूर्यं मृगयते । कदेत्यत आह । यद्यदा मघवा धनवानिंद्रः संवर्गं सम्यग्वृष्टेर्वर्जयितारं सूर्यमादित्यं जयत् तदीयरसापहरणद्वारेण जयति । अथ प्रत्यक्षस्तुतिः । हे मघवन् धनवन्निंद्र ते तव तत्सूर्यजयलक्षणं वीर्यं वीरत्वमन्यस्त्वत्तोऽन्यो भविष्यत्कालीनः पुमान् अन्वनुकर्तुं न शकत् । न शक्नोति । पुराणः पूर्वोऽपि त्वद्वीर्यमनुकर्तुं न शकत् । न शक्नोति । उतापि च । नूतनो वर्तमानकालीनोऽपि त्वदीयं वीर्यमनुकर्तुं न शक्नोति ॥

॥ इति सप्तमस्याष्टमे चतुर्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा ।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥६॥

विशेऽविशं। मघऽवा। परि। अशायत। जनानां। धेनाः। अवऽचाकशत्। वृषा। यस्य। अह। शक्रः। सवनेषु। रण्यति। सः। तीव्रैः। सोमैः। सहते। पृतन्यतः ॥ ६॥

वृषा कामानां वर्षिता मघवा धनवानिंद्रो विशंविशं सर्वान्मनुष्यान्पर्यशायत। परिशेते। किंच जनानां स्तोतृजनानां धेनाः स्तुतीरवचाकशत्। अभिपश्यति। किंच। शक्र इंद्रो यस्याह यस्यैव यजमानस्य सवनेषु रण्यति रमते स यजमानस्तीव्रैस्तीव्रकारैः प्रदीयमानैः सोमैः पृतन्यतः संग्राममिच्छतः शत्रून् सहते। अभिभवति ॥

॥ अथ सप्तमी ॥

आपो न सिंधुमभि यत्समक्षरन्त्सोमास इंद्रं कुल्या इव ह्रदं।
वर्धंति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥ ७॥

आपः। न। सिंधुं। अभि। यत्। संऽअक्षरन्। सोमासः। इंद्रं। कुल्याःऽइव। ह्रदं। वर्धंति। विप्राः। महः। अस्य। सदने। यवं। न। वृष्टिः। दिव्येन। दानुना ॥ ७॥

यद्यदा सोमासः सोमा इंद्रमभि समक्षरन् अभिक्षरंति। अभिगच्छंतीत्यर्थः। तत्र दृष्टांतौ दर्शयति। आपो न यथापः सिंधुं समुद्रमभिसंक्षरंति। कुल्या इव यथा च कुल्या ह्रदमभिसंक्षरंति तद्वदित्यर्थः। तदानीमस्येंद्रस्य महो महत्त्वं सदने यज्ञगृहे विप्रा मेधाविनो वर्धंति। तत्र दृष्टांतमाह। यवं न। यथा यवं यवसस्यं वृष्टिः। कर्तरि कृत्। वर्षिता पर्जन्यो दिव्येन दिवि भवेन दानुना दानेन वर्षणेन वर्धयति तद्वदित्यर्थः ॥

॥ अथाष्टमी ॥

वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः।
स सुन्वते मघवा जीरदानवेऽविंदज्ज्योतिर्मनवे हविष्मते ॥ ८॥

वृषा। न। क्रुद्धः। पतयत्। रजःऽसु। आ। यः। अर्यऽपत्नीः। अकृणोत्। इमाः। अपः। सः। सुन्वते। मघऽवा। जीरऽदानवे। अविंदत्। ज्योतिः। मनवे। हविष्मते ॥ ८॥

रजःसु लोकेषु वृषा न यथा वृषभः क्रुद्धः सन् प्रतिवृषभवधाय पतयन्गच्छति तद्वद्य इंद्रः क्रुद्धः सन्मेघवधाय पतयति हत्वा च मेघमर्यपत्नीः सर्वस्य जगतः स्वामिन इंद्रस्य पालयितव्या इमाः प्रसिद्धा अपो वृष्ट्युदकान्याकृणोदाकृणोति।

अस्मदभिमुखं करोति स मघवानिंद्रः सुन्वते सोमाभिषवं कुर्वते जीरदानवे क्षिप्रदानाय हविष्मते मनवे मनुष्याय। यजमानायेत्यर्थः। ज्योतिस्तेजोऽविंदत्। प्रायच्छत् ॥

॥ अथ नवमी ॥

उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत्।
वि रोचतामरुषो भानुना शुचिः स्व१र्ण शुक्रं शुशुचीत सत्पतिः ॥९॥

उत्। जायतां। परशुः। ज्योतिषा। सह। भूयाः। ऋतस्य। सुऽदुघा। पुराणऽवत्।
वि। रोचतां। अरुषः। भानुना। शुचिः। स्वः। न। शुक्रं। शुशुचीत। सत्ऽपतिः ॥९॥

परशुरिंद्रस्य वज्रो ज्योतिषा तेजसा सहोज्जायतां। अस्मच्छत्रुवधे मेघवधे च व्याप्रियतामित्यर्थः। किंच ऋतस्य सत्यस्य सुदुघा माध्यमिका वाक् पुराणवत् प्रत्नवत्काले भूयाः। भूयात्। पुरुषव्यत्ययः। किंचेंद्रोऽरुष आरोचमानो भानुना दीप्त्या शुचिर्ज्वलन् वि रोचतां। प्रकाशतां। किंच सत्पतिः सतां पतिरिंद्रः स्वर्नादित्य इव शुक्रं ज्वलन् शुशुचीत। अत्यंतं दीप्यतां ॥

॥ अथ दशमी ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥

गोभिः। तरेम। अमतिं। दुःऽएवां। यवेन। क्षुधं। पुरुऽहूत। विश्वां।
वयं। राजऽभिः। प्रथमाः। धनानि। अस्माकेन। वृजनेन। जयेम ॥१०॥

॥ अथैकादशी ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥११॥

बृहस्पतिः। नः। परि। पातु। पश्चात्। उत। उत्ऽतरस्मात्। अधरात्। अघऽयोः।
इंद्रः। पुरस्तात्। उत। मध्यतः। नः। सखा। सखिऽभ्यः। वरिवः। कृणोतु ॥११॥

एतदृग्द्वयं प्रागेव व्याख्यातं ॥

॥ इति सप्तमस्याष्टमे पंचविंशो वर्गः ॥

आ यात्वित्येकादशर्चं द्वितीयं सूक्तमांगिरसस्य कृष्णस्यार्षमैंद्रं। आदितस्तिस्रस्त्रिष्टुभः। ततः षड्जगत्यः। ततो द्वे त्रिष्टुभौ। तथा चानुक्रांतं। आ यातु त्रिचिष्टुबादीति॥ आभिप्लविकेषूक्थ्येषु ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदमावापार्थं। सूत्रितं च। आ यात्विंद्रः स्वपतिरिमां धियमिति ब्राह्मणाच्छंसी। आ॰ ७.९.। इति॥

॥ तत्र प्रथमा ॥

आ यात्विंद्रः स्वपतिर्मदाय यो धर्मणा तूतुजानस्तुविष्मान्।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥१॥

आ। यातु। इंद्रः। स्वऽपतिः। मदाय। यः। धर्मणा। तूतुजानः। तुविष्मान्।
प्रऽत्वक्षाणः। अति। विश्वा। सहांसि। अपारेण। महता। वृष्ण्येन ॥१॥

य इंद्रस्तूतुजानस्त्वरमाणस्तुविष्मान् वृद्धिमान्विश्वा विश्वानि सहांसि शत्रुबलान्यपारेण महताधिकेन वृष्ण्येन बलेन प्रत्वक्षाणः प्रकर्षेण तनूकुर्वन् अति। गच्छतीति शेषः। स्वपतिर्धनपतिरिंद्रो मदाय मदार्थं धर्मणा धारकेण रथेना यातु। अस्मद्यज्ञं प्रत्यागच्छतु॥

॥ अथ द्वितीया ॥

सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृपते गभस्तौ।
शीभं राजन्त्सुपथा याह्यर्वाङ् वर्धाम ते पपुषो वृष्ण्यानि ॥२॥

सुऽस्थामा। रथः। सुऽयमा। हरी इति। ते। मिम्यक्ष। वज्रः। नृऽपते। गभस्तौ।
शीभं। राजन्। सुऽपथा। आ। याहि। अर्वाङ्। वर्धाम। ते। पपुषः। वृष्ण्यानि॥२॥

हे नृपते नृणां पालकेंद्र ते तव रथः सुष्ठामा शोभनावस्थानो हरी अश्वावपि सुयमा सुयमौ। सुबद्धावित्यर्थः। किंच। तव गभस्तौ बाहौ वज्रो मिम्यक्ष। संहतो भवति। तथा सति हे राजन् सर्वस्येश्वरेंद्र शीभं शीघ्रं सुपथा शोभनेन मार्गेणार्वाङ् अस्मदभिमुख आ याहि। आगच्छ। आगत्य पपुषः सोमं पीतवतस्ते तव वृष्ण्यानि बलानि वर्धाम। वयं वर्धयामः॥

॥ अथ तृतीया ॥

एंद्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तविषास एनं।
प्रत्वक्षसं वृषभं सत्यशुष्ममेमस्मत्रा सधमादो वहंतु ॥३॥

आ। इंद्रऽवाहः। नृऽपतिं। वज्रऽबाहुं। उग्रं। उग्रासः। तविषासः। एनं। प्रऽत्वक्षसं। वृषभं। सत्यऽशुष्मं। आ। ईं। अस्मऽत्रा। सधऽमादः। वहंतु॥३॥

नृपतिं नरां नेतॄणां पालकं वज्रबाहुं वज्रहस्तमुग्रमुद्गूर्णं प्रत्वक्षसं शत्रुबलानां प्रकर्षेण तनूकर्तारं वृषभं कामानां वर्षितारं सत्यशुष्ममविसंवादिबलमेनमिंद्रं। आ ईमिति पूरणौ। उग्रास उद्गूर्णास्तविषासः प्रवृद्धाः सधमादः सह माद्यंत इंद्रवाह इंद्रस्य वोढारोऽस्मत्रास्मास्वा वहंतु॥

॥ अथ चतुर्थी ॥

एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कंभं धरुण आ वृषायसे।
ओजः कृष्व सं गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे॥४॥

एव। पतिं। द्रोणऽसाचं। सऽचेतसं। ऊर्जः। स्कंभं। धरुणे। आ। वृषऽयसे।
ओजः। कृष्व। सं। गृभाय। त्वे इति। अपि। असः। यथा। केऽनिपानां। इनः। वृधे॥४॥

हे इंद्र त्वमेवैवं पतिं पालकं द्रोणसाचं द्रोणकलशस्य सेवितारं सचेतसं सप्रज्ञमूर्जः स्कंभं बलस्य धारकं सोमं धरुणे धारके जठर आ वृषायसे। आसिंचसे। धारयसीत्यर्थः। किंच। मह्यमोजो बलं कृष्व। कुरुष्व। त्वे त्वय्यस्मानपि संगृभाय। संगृहाण च। किंच। केनिपानां मेधाविनामस्माकं। केनिप उशिज इति मेधाविनामसु पाठात्। वृधे वर्धनाय यथा यथावत्सर्वथेनः स्वाम्यसः। भवसि॥

॥ अथ पंचमी ॥

गमन्नस्मे वसून्या हि शंसिषं स्वाशिषं भरमा याहि सोमिनः।
त्वमीशिषे सास्मिन्ना सत्सि बर्हिष्यनाधृष्या तव पात्राणि धर्मणा॥५॥

गमन्। अस्मे इति। वसूनि। आ। हि। शंसिषं। सुऽआशिषं। भरं। आ। याहि। सोमिनः।
त्वं। ईशिषे। सः। अस्मिन्। आ। सत्सि। बर्हिषि। अनाधृष्या। तव। पात्राणि। धर्मणा॥५॥

हे इंद्र वसूनि त्वद्देयानि धनान्यस्मे मय्या गमन्। आगच्छंतु। हि यस्मात्त्वामहं शंसिषं। स्तौमि। किंच। सोमिनः सोमवतो मम स्वाशिषं शोभना आशिषो

यस्मिन्तं भरं यज्ञमा याहि । त्वमागच्छ । किंच त्वमीशिषे । धनस्येश्वरोऽसि । एवंविधः स त्वमस्मिन्नस्मदीये वेद्यास्तृते बर्हिष्या सत्सि । आसीद । किंच । तव सोमपात्राणि धर्मणा राक्षसानां कर्मणानाधृष्यानि धर्षयितुमशक्यानि ॥

॥ इति सप्तमस्याष्टमे षड्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

पृथक् प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशंत केपयः ॥६॥

पृथक् । प्र । आयन् । प्रथमाः । देवऽहूतयः । अकृण्वत । श्रवस्यानि । दुस्तरा ।
न । ये । शेकुः । यज्ञियां । नावं । आऽरुहं । ईर्मा । एव । ते । नि । अविशंत । केपयः ॥६॥

हे इंद्र तव प्रसादात्ते पृथक् प्रायन् देवलोकान्पृथग्गच्छंति ये प्रथमाः पूर्वे मुख्या वा देवहूतयो देवानामाह्वातारः । कर्तरि कृत् । किंच । दुष्टरान्यैर्दुस्तराणि श्रवस्यानि श्रवणीयाणि यशांस्यकृण्वत । अकुर्वत । किंच । ये त्वत्प्रसादरहिता जना यज्ञियां यज्ञसंबंधिनीं । यज्ञमयीमित्यर्थः । नावमारुहमारोढुं न शेकुर्न शक्नुवंति ते केपयः कुत्सितपूयकर्माणः पापकर्माणो जना ईर्मैव ऋणेनैव न्यविशंत । नीचैरविशंत । अधोगतिं प्राप्ता इत्यर्थः । तथा च यास्कः । पृथक् प्रायन् पृथक् प्रथतः प्रथमा देवहूतयो ये देवानाह्वयंताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियां नावमारोळ्हुमथ ये नाशक्नुवन्यज्ञियां नावमारोळ्हुमीर्मैव ते न्यविशंत ऋणेनैव ते न्यविशंतास्मिन्नेव लोक इति वा । नि० ५.२५. । इति ॥

॥ अथ सप्तमी ॥

एवैवापागपरे संतु दूढ्योऽश्वा येषां दुर्युज आयुयुज्रे ।
इत्था ये प्रागुपरे संति दावने पुरूणि यत्र वयुनानि भोजना ॥७॥

एव । एव । अपाक् । अपरे । संतु । दुःऽध्यः । अश्वाः । येषां । दुःऽयुजः । आऽयुयुज्रे ।
इत्था । ये । प्राक् । उपरे । संति । दावने । पुरूणि । यत्र । वयुनानि । भोजना ॥७॥

एवैवैवमेव दूढ्यो दुर्बुद्धयोऽपरेऽन्ये । अयज्वान इत्यर्थः । अपागपाचीना अधोगंतारः संतु भवंतु येषां यज्ञमकुर्वतामश्वा दुर्युजो दुर्योजाः प्रबला अश्वा

आयुयुज्रे रथेषु युज्यंते। ये सत्यपि सामर्थ्ये न यजंति ते नरकं गच्छंतीति भावः। किंच। इत्थेत्थं ते स्वर्गगामिनो भवंति य उपरे यज्वानः प्राग्मरणात्पूर्वमेव दावने देवानां हविर्दानाय संति। भवंति। यत्र येषु च यज्ञकारिषु वयुनानि प्रज्ञानानि कांतानि वा भोजना भोग्यानि धनानि पुरूणि बहूनि देवेभ्यो दानाय संति ॥

॥ अथाष्टमी ॥

गिरीँरज्रान्रेजमानाँ अधारयद्द्यौः क्रंदद॒न्तरिक्षाणि कोपयत् ।
समीचीने धिषणे वि ष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति ॥८॥

गिरीन्। अज्रान्। रेजमानान्। अधारयत्। द्यौः। क्रंदत्। अंतरिक्षाणि। कोपयत्।
समीचीने इति सम्ऽईचीने। धिषणे इति। वि। स्कभायति। वृष्णः। पीत्वा। मदे।
उक्थानि। शंसति ॥८॥

गिरीन्मेघानज्रान्गमनशीलान्रेजमानान्कंपमानानधारयत् इंद्रो धारितवान्। निश्चलान्कृतवानित्यर्थः। किंच द्यौर्द्युलोकस्तन्निवासी वा जनोऽसुरराक्षसेभ्यो भीतः सन् क्रंदत्। क्रंदति। इंद्रमाह्वयत्यात्मनः परित्राणार्थं। किंचेंद्रोऽंतरिक्षाणि कोपयत्। कोपयति। संक्षोभयतीत्यर्थः। किंच। इंद्रः समीचीने परस्परं संगते धिषणे द्यावापृथिव्यौ वि ष्कभायति। अंतरिक्षेण स्तभ्नाति। स्तंभयतीत्यर्थः। किंचेंद्रो वृष्णः स्वोदरस्यासेक्तॄन्सोमान्पीत्वा मदे सत्युक्थानि प्रशस्यानि वचनानि शंसति। प्रब्रवीति ॥

॥ अथ नवमी ॥

इमं बिभर्मि सुकृतं ते अंकुशं येनारुजासि मघवञ्छफारुजः ।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन्बोध्याभगः ॥९॥

इमं। बिभर्मि। सुऽकृतं। ते। अंकुशं। येन। आऽरुजासि। मघऽवन्। शफऽआरुजः।
अस्मिन्। सु। ते। सवने। अस्तु। ओक्यं। सुते। इष्टौ। मघऽवन्। बोधि। आऽभगः॥९॥

हे मघवन् धनवन्निंद्र ते तव सुकृतं संस्कृतमिममंकुशं बिभर्मि। धारयामि। अत्रांकुशशब्देन प्रेरकत्वगुणयोगात्स्तुतिरुच्यते। स्तुतिं धारयामीत्यर्थः। येन स्तुतिलक्षणांकुशेन स्तुतः सन् त्वं शफारुज आभिमुख्येन परबलानां हंतॄनैरावतादीन्गजानारुजासि। आभिमुख्येन रुजसि। पीडयसीत्यर्थः। किंच ते तवास्मिन्-

स्मदीये सवन ओक्यमोको निवासोऽस्तु । भवतु । किंच । हे मघवन् धनवन्निंद्राभग आभजनीयस्त्वं सुते सुतसोम इष्टौ यज्ञे बोधि । अस्मदीयाः स्तुतीर्बुध्यस्व ॥

॥ अथ दशमी ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥
गोभिः । तरेम । अमतिं । दुःऽएवां । यवेन । क्षुधं । पुरुऽहूत । विश्वां ।
वयं । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥१०॥

॥ अथैकादशी ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥११॥
बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इंद्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥११॥

इदमृग्द्वयं व्याख्यातचरं ॥

॥ इति सप्तमस्याष्टमे सप्तविंशो वर्गः ॥

दिवस्परीति द्वादशर्चं तृतीयं सूक्तं भालंदनस्य वत्सप्रेरार्षं त्रैष्टुभमाग्नेयं । तथा चानुक्रांतं । दिवस्परि द्वादश वत्सप्रिराग्नेयं त्विति ॥ प्रातरनुवाकाश्विनशस्त्रयोरिदमादिके द्वे सूक्ते अस्य सूक्तस्यांत्यां वर्जयित्वा । सूचितं च । दिवस्परीति सूक्तयोः पूर्वस्योत्तमामुद्धरेत् । आ॰ ४.१३. । इति ॥ क्षामवत्यामक्रंददग्निरित्येषा याज्या । सूचितं च । अग्ने त्वमस्मद्युयोध्यमीवा अक्रंददग्निः स्तनयन्निव द्यौः । आ॰ ३.१३. । इति ॥

॥ तत्र प्रथमा ॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिंधान एनं जरते स्वाधीः ॥१॥
दिवः । परि । प्रथमं । जज्ञे । अग्निः । अस्मत् । द्वितीयं । परि । जातऽवेदाः ।
तृतीयं । अप्ऽसु । नृऽमनाः । अजस्रं । इंधानः । एनं । जरते । सुऽआधीः ॥१॥

अग्निः प्रथमं पूर्वं दिवो द्युलोकस्य पर्युपर्यादित्यात्मना जज्ञे। जातः। जातवेदा जातप्रज्ञो जातधनो वाग्निर्द्वितीयमस्मदस्माकं पर्युपरि पार्थिवात्मना जज्ञे। नृमणा नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तोऽग्निस्तृतीयमप्स्वंतरिक्षे वैद्युतात्मना जज्ञे। एवंविधमेनमग्निं स्वाधीः सुप्रज्ञाताजस्रमनवरतमिंधानो दीपयञ्जरते। स्तौति। यद्वा वाजसनेयकोक्तप्रकारेणास्य मंत्रस्यार्थो द्रष्टव्यः। तद्यथा दिवस्परि प्रथमं जज्ञे अग्निरिति प्राणो वै द्यौः प्राणाद्वा एष प्रथममजायतास्मद्द्वितीयं परि जातवेदा इति यदेनमदो द्वितीयं पुरुषविधोऽजनयत्तृतीयमप्स्विति यदेनमद-स्तृतीयमज्झोऽजनयन्नृमणा अजस्रमिति प्रजापतिर्वै नृमणा अग्निरजस्रमिंधान एनं जरते स्वाधीरिति यो वा एनमिंधे स एनं जनयते स्वाधीः। श॰ ब्रा॰ ६. ५.४.३.। इति ॥

॥ अथ द्वितीया ॥

वि॒द्मा ते॑ अग्ने त्रे॒धा त्र॒याणि॑ वि॒द्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा।
वि॒द्मा ते॒ नाम॑ पर॒मं गुहा॒ यद्वि॒द्मा तमु॒त्सं यत॑ आज॒गंथ॑ ॥२॥

वि॒द्म। ते॒। अ॒ग्ने॒। त्रे॒धा। त्र॒याणि॑। वि॒द्म। ते॒। धाम॑। विऽभृ॑ता। पु॒रु॒ऽत्रा।
वि॒द्म। ते॒। नाम॑। प॒र॒मं। गुहा॑। यत्। वि॒द्म। तं। उत्सं॑। यतः॑। आ॒ऽज॒गंथ॑ ॥२॥

हे अग्ने ते तव त्रेधा त्रिषु स्थानेषु पृथिव्यंतरिक्षद्युलोकेषु स्थितानि त्रया-ण्यग्निवाय्वादित्याख्यानि त्रीणि रूपाणि विद्म। वयं जानीमः। किंच। हे अग्ने ते तव धाम सद्मानि स्थानानि विभृता विभृतानि पुरुत्रा बहुधा बहूनि वा गार्हपत्याहवनीयान्वाहार्यपचनादीनि विद्म। किंच। ते तव गुहा गूढमवेद-विद्भिरविज्ञातं परममुत्कृष्टं वेदे प्रसिद्धं यन्नामास्ति तद्विद्म। वेदविदो वयं विजानीमः। किंच। त्वं यतो यस्मादाजगंथागतवानसि। उत्पन्नवानित्यर्थः। तमुत्समुत्स्यंदयितारमुत्पादयितारं कारणात्मानं विद्म। जानीमः ॥

॥ अथ तृतीया ॥

स॒मु॒द्रे त्वा॑ नृ॒मणा॑ अ॒प्स्व१॒॑न्तर्नृ॒चक्षा॑ ईधे दि॒वो अ॑ग्न॒ ऊध॑न्।
तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वांस॑म॒पामु॒पस्थे॑ महि॒षा अ॑वर्धन् ॥३॥

स॒मु॒द्रे। त्वा॒। नृ॒ऽमनाः॑। अ॒प्ऽसु। अ॒न्तः। नृ॒ऽचक्षाः॑। ई॒धे॒। दि॒वः। अ॒ग्ने॒। ऊध॑न्।
तृ॒तीये॑। त्वा॒। रज॑सि। त॒स्थि॒ऽवांस॑। अ॒पां। उ॒पऽस्थे॑। म॒हि॒षाः। अ॒व॒र्ध॒न् ॥३॥

हे अग्ने समुद्रे महोदधौ जायमानमप्स्वंतरपां मध्ये वडवात्मना स्थितं त्वा त्वां नृमणा नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तो वरुण ईधे । संदीपितवान् । किंच । नृचक्षा नृणां प्रत्यक्षेण द्रष्टादित्यो दिवो द्युलोकस्य संबंधिन्यूधन्नूधस्यूधःस्थानीय आदित्यमंडले यज्ञे वेधे । संदीपितवान् । किंच । तृतीये त्रयाणां पूरकेऽपां वृष्ट्युदकानामुपस्थे स्थाने रजस्यंतरिक्षलोके तस्थिवांसं विद्युद्रूपेणावस्थितं त्वां महिषा महांतो माध्यमिका देवगणा मरुदादयः स्तोतारो वर्धन् । स्तुतिभिरवर्धयन् । यद्वा । वाजसनेयकोक्तप्रकारेणार्थो द्रष्टव्यः । तद्यथा समुद्रे त्वा नृमणा अप्स्वंतरिति प्रजापतिर्वै नृमणा अप्सु त्वा प्रजापतिरित्येतन्नृचक्षा ईधे दिवो अग्न ऊधन्निति प्रजापतिर्वै नृचक्षा आपो दिव ऊधस्तृतीये त्वा रजसि तस्थिवांसमिति द्यौर्वै तृतीयं रजोऽपामुपस्थे महिषा अवर्धन्निति प्राणा वै महिषा दिवि त्वा प्राणा अवर्धन्नित्येतत् । श॰ ब्रा॰ ६.५.४.५. । इति ॥

॥ अथ चतुर्थी ॥

अक्रँदद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन् ।
स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥४॥

अक्रँदत् । अ॒ग्निः । स्त॒नय॑न्ऽइव । द्यौः । क्षाम॑ । रेरि॑हत् । वी॒रुधः॑ । स॒म्ऽअ॒ञ्जन् ।
स॒द्यः । ज॒ज्ञा॒नः । वि । हि । ई॒म् । इ॒द्धः । अख्य॑त् । आ । रोद॑सी॒ इति॑ । भा॒नुना॑ ।
भा॒ति॒ । अ॒न्तरिति॑ ॥४॥

दावरूपोऽग्निः स्तूयते । अग्निर्दावाग्निः स्तनयन्निव द्यौर्यथा दीप्तो विद्युद्रूपः पर्जन्यो महांतं शब्दं करोति तद्वदक्रंदत् । महांतं शब्दं करोति । किं कुर्वन्नित्यत्राह । क्षाम क्षामां पृथिवीं रेरिहदास्वादयन्वीरुध ओषधीश्च समंजन् म्रक्षयन् । संतापयन्नित्यर्थः । किंच । सद्यस्तत्क्षणे समाने काले जज्ञानो जायमान इद्धो दीप्त ईमिदं स्वेन दग्धं वस्तुजातं व्यख्यत् । विविधं पश्यति । हीति पदपूरणः । किंच । रोदसी द्यावापृथिवी द्यावापृथिव्यावंतरंतरेण भानुना स्वदीप्त्या भाति । प्रकाशते । यद्वा वाजसनेयकोक्तार्थो द्रष्टव्यः । तद्यथा । अक्रंददग्निः स्तनयन्निव द्यौरिति क्रंदतीव हि पर्जन्यः स्तनयन्क्षामा रेरिहद्वीरुधः समंजन्निति क्षामां वै रेरिह्यमाणो वीरुधः समनक्ति । सद्यो जज्ञानो वि हीमिद्धो अख्यदिति सद्यो वा एष जज्ञान इदं सर्वं विख्यापयत्या रोदसी भानुना भात्यंतरितीमे वै द्यावा-

पृथिवी रोदसी ते एष भानुना भात्यंतः । श० ब्रा० ६.५.३.१. । इति वैद्युतस्य स्तुतिः । यद्वेयं दावाग्नेः स्तुतिरिति ॥

॥ अथ पंचमी ॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥५॥

श्रीणां । उत्ऽआरः । धरुणः । रयीणां । मनीषाणां । प्रऽअर्पणः । सोमऽगोपाः ।
वसुः । सूनुः । सहसः । अप्ऽसु । राजा । वि । भाति । अग्रे । उषसां । इधानः ॥५॥

श्रीणां विभूतीनामुदार उद्गमयिता दाता रयीणां धनानां धरुणो धारको मनीषाणामीप्सितार्थानां प्रार्पणः प्रापयिता सोमगोपाः सोमस्य गोपा वसुः सर्वस्य लोकस्य वासकः सहसो बलस्य सूनुरप्सूदकेषु स्थितो राजा सर्वस्येश्वर उषसामग्रे प्रभातकाल इधानोऽग्निहोत्रार्थं समिध्यमानोऽग्निर्वि भाति । प्रकाशते ॥

॥ अथ षष्ठी ॥

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।
वीळुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजंत पंच ॥६॥

विश्वस्य । केतुः । भुवनस्य । गर्भः । आ । रोदसी इति । अपृणात् । जायमानः ।
वीळुं । चित् । अद्रिं । अभिनत् । पराऽयन् । जनाः । यत् । अग्निं । अयजंत । पंच ॥६॥

विश्वस्य सर्वस्य केतुः प्रज्ञापको भुवनस्योदकस्य गर्भो गर्भभूतोऽग्निर्जायमानः प्रादुर्भवन्नेव रोदसी द्यावापृथिव्यावापृणात् । आपूरयति । परायन् परागच्छन् वीळुं चिद्दृढमप्यद्रिं मेघमभिनत् भिनत्ति च । कदेत्यत्राह । यद्यदा पंच जना मनुष्या अग्निमयजंत । यजंते ॥

॥ इति सप्तमस्याष्टमेऽष्टाविंशो वर्गः ॥

॥ अथ सप्तमी ॥

उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥७॥

उशिक् । पावकः । अरतिः । सुऽमेधाः । मर्तेषु । अग्निः । अमृतः । नि । धायि ।
इयर्ति । धूमं । अरुषं । भरिभ्रत् । उत् । शुक्रेण । शोचिषा । द्यां । इनक्षन् ॥७॥

उशिक् हवींषि कामयमानः पावकः सर्वस्य लोकस्य शोधकोऽरतिर्गंता भूतानामारयिता वा सुमेधाः सुप्रज्ञोऽमृतो मरणधर्मरहितोऽग्निर्मर्तेषु मनुष्येषु नि धायि । निहितः । सोऽयमग्निर्धूममियर्ति । प्रेरयति । किंच । अरुषमारोचमानं रूपं भरिभ्रद्धारयन् शुक्रेण शुक्लेन शोचिषा रोचिषा द्यां दिवमिनक्षन् व्याप्नुवन् गच्छतीति शेषः ॥

॥ अथाष्टमी ॥

दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर्जनयत्सुरेताः ॥८॥

दृशानः । रुक्मः । उर्विया । वि । अद्यौत् । दुःऽमर्षं । आयुः । श्रिये । रुचानः ।
अग्निः । अमृतः । अभवत् । वयःऽभिः । यत् । एनं । द्यौः । जनयत् । सुऽरेताः ॥८॥

दृशानः प्रत्यक्षेण दृश्यमानो रुक्मो रोचमानोऽग्निरुर्वियोर्वत्यंतं व्यद्यौत् । विद्योतते । किंच । आयुर्गंता स सर्वतोऽयमग्निः श्रिये विभूत्यै दुर्मर्षं दुरभिभवं यथा भवति तथा रुचानो रोचमानो भवति । सोऽयमग्निर्वयोभिरन्नैर्वनस्पतिभिरमृतो मरणरहितोऽभवत् यद्यस्मात्कारणादेनमग्निं सुरेताः शोभनरेतस्को द्यौः प्राण आदित्यो वा जनयत् । जनयति ॥

॥ अथ नवमी ॥

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवंतमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥९॥

यः । ते । अद्य । कृणवत् । भद्रऽशोचे । अपूपं । देव । घृतऽवंतं । अग्ने ।
प्र । तं । नय । प्रऽतरं । वस्यः । अच्छ । अभि । सुम्नं । देवऽभक्तं । यविष्ठ ॥९॥

हे भद्रशोचे कल्याणदीप्ते हे देव द्योतमान यविष्ठ युवतमाग्ने ते तुभ्यं यो यजमानोऽद्यास्मिन्नहनि घृतवंतं घृतेन युक्तमपूपं पुरोडाशं कृणवत् करोति प्रतरं प्रकृष्टतरं यजमानं वस्यो वसीयोऽच्छ प्रति प्र नय । अत्यर्थं प्रापय । तथा

देवभक्तं स्तुतिभिर्हविर्भिश्च देवानां संभक्तारं सेवितारं तं यजमानं द्युम्नं सुखमभि प्रति प्र नय ॥

॥ अथ दशमी ॥

आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने।

प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥१०॥

आ। तं। भज। सौश्रवसेषु। अग्ने। उक्थेऽउक्थे। आ। भज। शस्यमाने।

प्रियः। सूर्ये। प्रियः। अग्ना। भवाति। उत्। जातेन। भिनदत्। उत्। जनिऽत्वैः ॥१०॥

हे अग्ने त्वं सौश्रवसेषु। शोभनानि श्रवांस्यन्नानि हवींषि येषु कर्मसु तानि सौश्रवसानि। तेषु क्रियमाणेषु तं यजमानं स्तोतारं वा भज। अभीष्टफलप्रदानेन सेवस्व। किंच। उक्थे शस्त्रे शस्यमाने पठ्यमाने सति तमा भज। अभीष्टफल-प्रदानेनैव सेवस्व। सोऽयं यजमानः स्तोता वा सूर्ये प्रियो भवाति। भवतु। तथाग्नाग्नावपि प्रियो भवाति। किंच। सोऽयं जातेनोत्पन्नेन पुत्रेणोद्भिनदत्। शत्रून्विदारयतु। तथा जनित्वैर्जनयिष्यमाणैश्च पुत्रैः शत्रूनुद्भिनदत् ॥

॥ अथैकादशी ॥

त्वामग्ने यजमाना अनु द्यून्विश्वा वसु दधिरे वार्याणि।

त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः ॥११॥

त्वां। अग्ने। यजमानाः। अनु। द्यून्। विश्वा। वसु। दधिरे। वार्याणि।

त्वया। सह। द्रविणं। इच्छमानाः। व्रजं। गोऽमन्तं। उशिजः। वि। वव्रुः ॥११॥

हे अग्ने त्वां प्रति यजमाना अनु द्यून् प्रत्यहं विश्वा विश्वानि वार्याणि वरणीयानि वसु वसूनि धनानि दधिरे। धारयंति। किंच। त्वया सह द्रविण-मसुरैरपहृतं गोरूपं धनमिच्छमानाः कामयमाना उशिजो मेधाविनो देवा गोमंतं पशुमंतं व्रजं वि वव्रुः। विवृतद्वारं कृतवंतः ॥

॥ अथ द्वादशी ॥

अस्ताव्यग्निर्नरां सुशेवो वैश्वानर ऋषिभिः सोमगोपाः।

अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरं ॥१२॥

अस्तावि । अग्निः । नराम् । सुऽशेवः । वैश्वानरः । ऋषिऽभिः । सोमऽगोपाः ।
अद्वेषे इति । द्यावापृथिवी इति । हुवेम । देवाः । धत्त । रयिम् । अस्मे इति । सुऽवीरम् ॥ १२ ॥

अद्वेषे द्यावापृथिवी द्यावापृथिव्यौ हुवेम । वयं ह्वयेम । किंच । हे देवा यूयं सुवीरं शोभनपुत्राद्युपेतं रयिं धनमस्मे अस्मासु धत्त । धारयत ॥

॥ इति सप्तमस्याष्टम एकोनत्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

---

# SARVÂNUKRAMAH.

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 1 | 9.1.1 | 6.7.16 | Svâdishṭhayâ | 10 | Madhuchandâ Vaiśvâmitraḥ. | Somaḥ Pavamânaḥ. | Gâyatrî. | 1 |
| 2 | 9.1.2 | 6.7.18 | Pavasva | 10 | Medhâtithiḥ Kâṇvaḥ. | The same. | The same. | 4 |
| 3 | 9.1.3 | 6.7.20 | Esha | 10 | Śunaḥśepa Âjîgartiḥ. | ...... | ...... | 6 |
| 4 | 9.1.4 | 6.7.22 | Sanâ | 10 | Hiraṇyastûpa Ângirasaḥ. | ...... | ...... | 9 |
| 5 | 9.1.5 | 6.7.24 | Samiddhaḥ | 11 | Asitaḥ Kâśyapaḥ or Devalaḥ. | Âprîsûktam, (without Narâśamsaḥ.) | 1–7 Gâyatrî, 8–11 Anushṭup. | 11 |
| 6 | 9.1.6 | 6.7.26 | Mandrayâ | 9 | The same. | Somaḥ Pavamânaḥ. | Gâyatrî. | 14 |
| 7 | 9.1.7 | 6.7.28 | Asṛigram | 9 | ...... | The same. | The same. | 17 |
| 8 | 9.1.8 | 6.7.30 | Ete somâḥ | 9 | ...... | ...... | ...... | 19 |
| 9 | 9.1.9 | 6.7.32 | Pari priyâ | 9 | ...... | ...... | ...... | 21 |
| 10 | 9.1.10 | 6.7.34 | Pra svânâsaḥ | 9 | ...... | ...... | ...... | 24 |
| 11 | 9.1.11 | 6.7.36 | Upâsmai | 9 | ...... | ...... | ...... | 26 |
| 12 | 9.1.12 | 6.7.38 | Somâ asṛigram | 9 | ...... | ...... | ...... | 28 |
| 13 | 9.1.13 | 6.8.1 | Somaḥ punânaḥ | 9 | ...... | ...... | ...... | 31 |
| 14 | 9.1.14 | 6.8.3 | Pari pra | 8 | ...... | ...... | ...... | 33 |
| 15 | 9.1.15 | 6.8.5 | Esha dhiyâ | 8 | ...... | ...... | ...... | 35 |
| 16 | 9.1.16 | 6.8.6 | Pra te sotâraḥ | 8 | ...... | ...... | ...... | 38 |
| 17 | 9.1.17 | 6.8.7 | Pra nimnena | 8 | ...... | ...... | ...... | 40 |
| 18 | 9.1.18 | 6.8.8 | Pari suvânaḥ | 7 | ...... | ...... | ...... | 42 |
| 19 | 9.1.19 | 6.8.9 | Yat soma | 7 | ...... | ...... | ...... | 43 |
| 20 | 9.1.20 | 6.8.10 | Pra kaviḥ | 7 | ...... | ...... | ...... | 45 |
| 21 | 9.1.21 | 6.8.11 | Ete dhâvanti | 7 | ...... | ...... | ...... | 47 |
| 22 | 9.1.22 | 6.8.12 | Ete somâsaḥ | 7 | ...... | ...... | ...... | 49 |
| 23 | 9.1.23 | 6.8.13 | Somâ asṛigram | 7 | ...... | ...... | ...... | 51 |
| 24 | 9.1.24 | 6.8.14 | Pra somâsaḥ | 7 | ...... | ...... | ...... | 53 |
| 25 | 9.2.1 | 6.8.15 | Pavasva | 6 | Dṛilhacyuta Âgastyaḥ. | ...... | ...... | 55 |
| 26 | 9.2.2 | 6.8.16 | Tam amṛikshanta | 6 | Idhmavâho Dârḍhacyutaḥ. | ...... | ...... | 56 |
| 27 | 9.2.3 | 6.8.17 | Esha kaviḥ | 6 | Nṛimedhaḥ. | ...... | ...... | 58 |
| 28 | 9.2.4 | 6.8.18 | Esha vâjî | 6 | Priyamedhaḥ. | ...... | ...... | 59 |
| 29 | 9.2.5 | 6.8.19 | Prâsya | 6 | Nṛimedhaḥ. | ...... | ...... | 61 |
| 30 | 9.2.6 | 6.8.20 | Pra dhârâḥ | 6 | Binduḥ. | ...... | ...... | 62 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 31 | 9.2.7 | 6.8.21 | Pra somâsaḥ | 6 | Gotamaḥ. | Somaḥ Pavamânaḥ. | Gâyatrî. | 64 |
| 32 | 9.2.8 | 6.8.22 | Pra somâsaḥ | 6 | S'yâvâs'vaḥ. | The same. | The same. | 65 |
| 33 | 9.2.9 | 6.8.23 | Pra somâsaḥ | 6 | Tritaḥ. | ...... | ...... | 67 |
| 34 | 9.2.10 | 6.8.24 | Pra suvânaḥ | 6 | The same. | ...... | ...... | 69 |
| 35 | 9.2.11 | 6.8.25 | Â naḥ pavasva | 6 | Prabhûvasuḥ. | ...... | ...... | 70 |
| 36 | 9.2.12 | 6.8.26 | Asarji | 6 | The same. | ...... | ...... | 72 |
| 37 | 9.2.13 | 6.8.27 | Pra sutaḥ | 6 | Rahûgaṇaḥ. | ...... | ...... | 73 |
| 38 | 9.2.14 | 6.8.28 | Esha u syaḥ | 6 | The same. | ...... | ...... | 75 |
| 39 | 9.2.15 | 6.8.29 | Âs'ur arsha | 6 | Bṛihanmatiḥ. | ...... | ...... | 76 |
| 40 | 9.2.16 | 6.8.30 | Punânaḥ | 6 | The same. | ...... | ...... | 78 |
| 41 | 9.2.17 | 6.8.31 | Pra ye gâvaḥ | 6 | Medhyâtithiḥ. | ...... | ...... | 80 |
| 42 | 9.2.18 | 6.8.32 | Janayan | 6 | The same. | ...... | ...... | 81 |
| 43 | 9.2.19 | 6.8.33 | Yo atyaḥ | 6 | ...... | ...... | ...... | 83 |
| 44 | 9.2.20 | 7.1.1 | Pra ṇaḥ | 6 | Ayâsyaḥ. | ...... | ...... | 87 |
| 45 | 9.2.21 | 7.1.2 | Sa pavasva | 6 | The same. | ...... | ...... | 88 |
| 46 | 9.2.22 | 7.1.3 | Asṛigran | 6 | ...... | ...... | ...... | 90 |
| 47 | 9.2.23 | 7.1.4 | Ayâ somaḥ | 5 | Kavir Bhârgavaḥ. | ...... | ...... | 92 |
| 48 | 9.2.24 | 7.1.5 | Tam tvâ | 5 | The same. | ...... | ...... | 93 |
| 49 | 9.2.25 | 7.1.6 | Pavasva | 5 | ...... | ...... | ...... | 94 |
| 50 | 9.2.26 | 7.1.7 | Ut te s'ushmâsaḥ | 5 | Ucathyaḥ. | ...... | ...... | 96 |
| 51 | 9.2.27 | 7.1.8 | Adhvaryo | 5 | The same. | ...... | ...... | 97 |
| 52 | 9.2.28 | 7.1.9 | Pari dyukshaḥ | 5 | ...... | ...... | ...... | 98 |
| 53 | 9.2.29 | 7.1.10 | Ut te | 4 | Avatsâraḥ. | ...... | ...... | 99 |
| 54 | 9.2.30 | 7.1.11 | Asya pratnâm | 4 | The same. | ...... | ...... | 101 |
| 55 | 9.2.31 | 7.1.12 | Yavam yavam | 4 | ...... | ...... | ...... | 102 |
| 56 | 9.2.32 | 7.1.13 | Pari somaḥ | 4 | ...... | ...... | ...... | 103 |
| 57 | 9.2.33 | 7.1.14 | Pra te dhârâḥ | 4 | ...... | ...... | ...... | 104 |
| 58 | 9.2.34 | 7.1.15 | Tarat sa | 4 | ...... | ...... | ...... | 105 |
| 59 | 9.2.35 | 7.1.16 | Pavasva | 4 | ...... | ...... | ...... | 106 |
| 60 | 9.2.36 | 7.1.17 | Pra gâyatreṇa | 4 | ...... | ...... | 1, 2 and 4 Gâyatrî, 3 Puraushṇik. | 107 |
| 61 | 9.3.1 | 7.1.18 | Ayâ vîtî | 30 | Amahîyuḥ. | ...... | Gâyatrî. | 108 |
| 62 | 9.3.2 | 7.1.24 | Ete asṛigram | 30 | Jamadagniḥ. | ...... | The same. | 116 |
| 63 | 9.3.3 | 7.1.30 | Â pavasva | 30 | Nidhruviḥ Kâs'yapaḥ. | ...... | ...... | 122 |
| 64 | 9.3.4 | 7.1.36-41 | Vṛishâ soma | 30 | Kas'yapaḥ. | ...... | ...... | 129 |
| 65 | 9.3.5 | 7.2.1 | Hinvanti | 30 | Bhṛigur Vâruṇiḥ or Jamadagniḥ. | ...... | ...... | 137 |
| 66 | 9.3.6 | 7.2.7 | Pavasva | 30 | S'atam Vaikhânasâḥ. | Somaḥ, 19–21 Agniḥ. | 1–17, 19–30 Gâyatrî, 18 Anushṭup. | 146 |
| 67 | 9.3.7 | 7.2.13 | Tvam somâsi | 32 | 1–3 Bharadvâjaḥ, 4–6 Kas'yapaḥ, 7–9 Gotamaḥ, 10–12 Atriḥ, 13–15 Vis'vâmitraḥ, 16–18 | 1–9, 13–22, 28–30 Somaḥ, 10–12 Somaḥ or Pûshâ, 23 and 24 Agniḥ, 25 Ag- | 1–15, 19–26, 28, 29 Gâyatrî, 16-18 Dvipadâ Gâyatrî, 27, 31, 32 Anushṭup, 30 Puraushṇik. | 156 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| | | | | | Jamadagniḥ, 19–21 Vasishṭhaḥ, 22–32 Pavitraḥ or Vasishṭhaḥ or both. | niḥ or Savitâ, 26 Agniḥ or Agniḥ and Savitâ, 27 Agniḥ or Vis′ve devâḥ, 31 and 32 Pavamânyadhyetṛistutiḥ. | | |
| 68 | 9.4.1 | 7.2.19 | Pra devam | 10 | Vatsaprir Bhâlandanaḥ. | Somaḥ. | 1–9 Jagatî, 10 Trishṭup. | 167 |
| 69 | 9.4.2 | 7.2.21 | Ishur na | 10 | Hiraṇyastûpaḥ. | The same. | 1–8 Jagatî, 9 and 10 Trishṭup. | 172 |
| 70 | 9.4.3 | 7.2.23 | Trir asmai | 10 | Reṇur Vais′vâmitraḥ. | ...... | 1–9 Jagatî, 10 Trishṭup. | 177 |
| 1 | 9.4.4 | 7.2.25 | Â dakshiṇâ | 9 | Ṛishabho Vais′vâmitraḥ. | ...... | 1–8 Jagatî, 9 Trishṭup. | 183 |
| 2 | 9.4.5 | 7.2.27 | Harim mṛijanti | 9 | Harimantaḥ. | ...... | Jagatî. | 188 |
| 3 | 9.4.6 | 7.2.29 | Srakve | 9 | Pavitraḥ. | ...... | The same. | 192 |
| 4 | 9.4.7 | 7.2.31 | S′is′ur na | 9 | Kakshîvân. | ...... | 1–7, 9 Jagatî, 8 Trishṭup. | 197 |
| 5 | 9.4.8 | 7.2.33 | Abhi priyâṇi | 5 | Kaviḥ. | ...... | Jagatî. | 202 |
| 6 | 9.4.9 | 7.3.1 | Dhartâ | 5 | The same. | ...... | The same. | 205 |
| 7 | 9.4.10 | 7.3.2 | Esha pra | 5 | ...... | ...... | ...... | 207 |
| 8 | 9.4.11 | 7.3.3 | Pra râjâ | 5 | ...... | ...... | ...... | 210 |
| 9 | 9.4.12 | 7.3.4 | Acodasaḥ | 5 | ...... | ...... | ...... | 212 |
| 0 | 9.4.13 | 7.3.5 | Somasya dhârâ | 5 | Vasur Bhâradvâjaḥ. | ...... | ...... | 215 |
| 1 | 9.4.14 | 7.3.6 | Pra somasya | 5 | The same. | ...... | 1–4 Jagatî, 5 Trishṭup. | 217 |
| 2 | 9.4.15 | 7.3.7 | Asâvi | 5 | ...... | ...... | The same. | 219 |
| 3 | 9.4.16 | 7.3.8 | Pavitram | 5 | Pavitraḥ. | ...... | Jagatî. | 221 |
| 4 | 9.4.17 | 7.3.9 | Pavasva | 5 | Prajâpatir Vâcyaḥ. | ...... | The same. | 224 |
| 5 | 9.4.18 | 7.3.10 | Indrâya | 12 | Veno Bhârgavaḥ. | ...... | 1–10 Jagatî, 11 and 12 Trishṭup. | 226 |
| 6 | 9.5.1 | 7.3.12 | Pra te | 48 | 1–10 Akṛishṭâ Mâshâḥ, 11–20 Sikatâ Nivâvarî, 21–30 Pṛis′nayo ’jâḥ, 31–40 The three sets together, 41–45 Atriḥ, 46–48 Gṛitsamadaḥ. | ...... | Jagatî. | 231 |
| 7 | 9.5.2 | 7.3.22 | Pra tu drava | 9 | Us′anâḥ. | ...... | Trishṭup. | 251 |
| 8 | 9.5.3 | 7.3.24 | Ayam somaḥ | 8 | The same. | ...... | The same. | 255 |
| 9 | 9.5.4 | 7.3.25 | Pro syaḥ | 7 | ...... | ...... | ...... | 258 |
| 0 | 9.5.5 | 7.3.26 | Pra hinvânaḥ | 6 | Vasishṭhaḥ. | ...... | ...... | 261 |
| 1 | 9.5.6 | 7.4.1 | Asarji | 6 | Kas′yapaḥ. | ...... | ...... | 264 |
| 2 | 9.5.7 | 7.4.2 | Pari suvânaḥ | 6 | The same. | ...... | ...... | 267 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 93 | 9.5.8 | 7.4.3 | Sâkamukshaḥ | 5 | Nodhâḥ. | Somaḥ. | Trishṭup. | 270 |
| 94 | 9.5.9 | 7.4.4 | Adhi yat | 5 | Kaṇvaḥ. | The same. | The same. | 272 |
| 95 | 9.5.10 | 7.4.5 | Kanikranti | 5 | Praskaṇvaḥ. | ...... | ...... | 274 |
| 96 | 9.5.11 | 7.4.6 | Pra senânîḥ | 24 | Pratardano Daivodâsiḥ. | ...... | ...... | 277 |
| 97 | 9.6.1 | 7.4.11 | Asya preshâ | 58 | 1–3 Vasishṭhaḥ, 4–6 Indrapramatiḥ, 7–9 Vṛishagaṇaḥ, 10–12 Manyuḥ, 13–15 Upamanyuḥ, 16–18 Vyâghrapât, 19–21 S'aktiḥ, 22–24 Karṇas'rut, 25–27 Mṛilîkaḥ, 28–30 Vasukraḥ (all nine Vasishṭhas), 31–44 Parâs'araḥ, 45–58 Kutsaḥ. | ...... | ...... | 288 |
| 98 | 9.6.2 | 7.4.23 | Abhi naḥ | 12 | Ambarîshaḥ and Ṛijis'vâ. | ...... | Anushṭup, 11 Bṛihatî. | 31 |
| 99 | 9.6.3 | 7.4.25 | Â haryatâya | 8 | Rebhasûnû Kâs'yapau. | ...... | 1 Bṛihatî, 2–8 Anushṭup. | 31 |
| 100 | 9.6.4 | 7.4.27, 28 | Abhî navante | 9 | The same. | ...... | Anushṭup. | 32 |
| 101 | 9.6.5 | 7.5.1 | Purojitî | 16 | 1–3 Andhîguḥ S'yâvâs'viḥ, 4–6 Yayâtir Nâhushaḥ, 7–9 Nahusho Mânavaḥ, 10–12 Manuḥ Sâmvaraṇaḥ, 13–16 Prajâpatiḥ. | ...... | Anushṭup, 2 and 3 Gâyatrî. | 32 |
| 102 | 9.6.6 | 7.5.4 | Krâṇâ | 8 | Tritaḥ. | ...... | Ushṇik. | 33 |
| 103 | 9.6.7 | 7.5.6 | Pra punânâya | 6 | Dvita Âptyaḥ. | ...... | The same. | 33 |
| 104 | 9.7.1 | 7.5.7 | Sakhâyaḥ | 6 | Parvata - Nâradau Kâs'yapau or S'ikhaṇḍinyâv Apsarasau. | ...... | ...... | 33 |
| 105 | 9.7.2 | 7.5.8 | Tam vaḥ | 6 | Parvata-Nâradau. | ...... | ...... | 3 |
| 106 | 9.7.3 | 7.5.9 | Indram accha | 14 | 1–3 Agnis' Câkshushaḥ, 4–6 Cakshur Mânavaḥ, 7–9 Manur Âpsavaḥ, 10–14 Agniḥ. | ...... | ...... | 3 |
| 107 | 9.7.4 | 7.5.12 | Parîtaḥ | 26 | Saptarshayaḥ. | ...... | Prâgâtham, 3 and 16 Dvipadâ, 8–10 Bṛihatî. | 3 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 108 | 9.7.5 | 7.5.17 | Pavasva | 16 | 1 and 2 Gaurivîtiḥ, 3 S'aktiḥ, 4 and 5 Ûruḥ, 6 and 7 Ṛijis'vâ, 8 and 9 Ûrdhasadmâ, 10 and 11 Kṛitayas'âḥ, 12 and 13 Ṛiṇaṁcayaḥ, 14–16 S'aktiḥ. | Somaḥ. | Kâkubhâḥ pragâthâḥ, 13 Gâyatrî yavamadhyâ. | 357 |
| 109 | 9.7.6 | 7.5.20 | Pari pra | 22 | Agnayo dhishṇyâ ais'varâḥ. | The same. | Dvaipadam. | 363 |
| 110 | 9.7.7 | 7.5.22 | Pary û shu | 12 | Tryaruṇa-Trasadasyû. | ...... | 1–3 Anushṭup pipîlikamadhyâ, 4–9 Ûrdhvabṛihatî, 10–12 Virâṭ. | 369 |
| 111 | 9.7.8 | 7.5.24 | Ayâ rucâ | 3 | Anânataḥ Pâruc-chepiḥ. | ...... | Âtyashṭam. | 373 |
| 112 | 9.7.9 | 7.5.25 | Nânânam | 4 | S'is'uḥ. | ...... | Pâṅktam. | 375 |
| 113 | 9.7.10 | 7.5.26 | S'aryaṇâvati | 11 | Kas'yapaḥ. | ...... | The same. | 378 |
| 114 | 9.7.11 | 7.5.28 | Ya indoḥ | 4 | The same. | ...... | ...... | 382 |
| 1 | 10.1.1 | 7.5.29 | Agre bṛihan | 7 | Tritaḥ. | Agniḥ. | Trishṭup. | 385 |
| 2 | 10.1.2 | 7.5.30 | Piprîhi | 7 | The same. | The same. | The same. | 389 |
| 3 | 10.1.3 | 7.5.31 | Ino râjan | 7 | ...... | ...... | ...... | 392 |
| 4 | 10.1.4 | 7.5.32 | Pra te | 7 | ...... | ...... | ...... | 395 |
| 5 | 10.1.5 | 7.5.33 | Ekaḥ samudraḥ | 7 | ...... | ...... | ...... | 399 |
| 6 | 10.1.6 | 7.6.1 | Ayam sa | 7 | ...... | ...... | ...... | 403 |
| 7 | 10.1.7 | 7.6.2 | Svasti | 7 | ...... | ...... | ...... | 406 |
| 8 | 10.1.8 | 7.6.3 | Pra ketunâ | 9 | Tris'irâs Tvâshṭraḥ. | 1–6 Agniḥ, 7–9 Indraḥ. | ...... | 409 |
| 9 | 10.1.9 | 7.6.5 | Âpo hi | 9 | SindhudvîpaÂmbarîshaḥ or Tris'irâs Tvâshṭraḥ. | Âpaḥ. | Gâyatrî, 8 and 9 Anushṭup, 5 Vardhamânâ, 7 Pratishṭhâ. | 414 |
| 10 | 10.1.10 | 7.6.6 | O cit | 14 | Vaivasvatayor Yama-Yamyoḥ saṁvâdaḥ. | | Trishṭup. | 416 |
| 11 | 11.1.11 | 7.6.9 | Vṛishâ | 9 | Havirdhâna Âṅgiḥ. | Agniḥ. | 1–6 Jagatî, 7–9 Trishṭup. | 423 |
| 12 | 10.1.12 | 7.6.11 | Dyâvâ | 9 | The same. | The same. | Trishṭup. | 428 |
| 13 | 10.1.13 | 7.6.13 | Yuje | 5 | Vivasvân Âdityaḥ. | Havirdhânam. | 1–4 Trishṭup, 5 Jagatî. | 431 |
| 14 | 10.1.14 | 7.6.14 | Pareyivâṁsam | 16 | Yamaḥ. | Yamaḥ, 6 Liṅgoktadevatâḥ, 7–9 Liṅgoktadevatâḥ Pitaro vâ, 10–12 S'vânau. | 1–12 Trishṭup, 13, 14 and 16 Anushṭup, 15 Bṛihatî. | 434 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 15 | 10.1.15 | 7.6.17 | Udîratâm | 14 | S'ankho Yâmâyanaḥ. | Pitaraḥ. | Trishṭup, 11 Jagatî. | 441 |
| 16 | 10.1.16 | 7.6.20 | Mainam | 14 | Damano Yâmâyanaḥ. | Agniḥ. | 1–10 Trishṭup, 11–14 Anushṭup. | 448 |
| 17 | 10.2.1 | 7.6.23 | Tvashṭâ | 14 | Devasravâ Yâmâyanaḥ. | 1 and 2 Saraṇyûḥ, 3–6 Pûshâ, 7–9 Sarasvatî, 10–14 Âpaḥ, 11–13 Âpaḥ or Somaḥ. | 1–12 Trishṭup, 13 and 14 Anushṭup, 13 Anushṭup or Purastâdbṛihatî. | 455 |
| 18 | 10.2.2 | 7.6.26–28 | Param mṛityo | 14 | Saṁkusuko Yâmâyanaḥ. | 1–4 Mṛityuḥ, 5 Dhâtâ, 6 Tvashṭâ, 7–13 Pitṛimedhaḥ, 14 Pitṛimedhaḥ or Prajâpatiḥ. | 1–10, 12 Trishṭup, 11 Prastârapaṅktiḥ, 13 Jagatî, 14 Anushṭup. | 463 |
| 19 | 10.2.3 | 7.7.1 | Ni vartadhvam | 8 | Mathito Yâmâyanaḥ, or Bhṛigur Vâruṇiḥ, or Cyavano Bhârgavaḥ. | Âpaḥ or Gâvaḥ, 1 c. d. Agnîshomau. | Anushṭup, 6 Gâyatrî. | 470 |
| 20 | 10.2.4 | 7.7.2 | Bhadram | 10 | Vimada Aindraḥ or Prâjâpatyaḥ, or Vasukṛid Vâsukraḥ. | Agniḥ. (1 pâda eva vâ sântyarthaḥ.) | Gâyatrî, 1 Ekapadâ, 2 Anushṭup, 9 Virâṭ, 10 Trishṭup. | 474 |
| 21 | 10.2.5 | 7.7.4 | Âgnim na | 8 | The same. | Agniḥ. | Âstârapaṅktam. | 478 |
| 22 | 10.2.6 | 7.7.6 | Kuha | 15 | ...... | Indraḥ. | Purastâdbârhatam, 5, 7 and 9 Anushṭup, 15 Trishṭup. | 482 |
| 23 | 10.2.7 | 7.7.9 | Yajâmahe | 7 | ...... | The same. | 1 and 7 Trishṭup, 5 Abhisâriṇî, 2–4, 6 Jagatî. | 488 |
| 24 | 10.2.8 | 7.7.10 | Indra somam | 6 | ...... | 1–3 Indraḥ, 4–6 Asvinau. | 1–3 Âstârapaṅktam, 4–6 Anushṭup. | 492 |
| 25 | 10.2.9 | 7.7.11 | Bhadram | 11 | ...... | Somaḥ. | Âstârapaṅktam. | 495 |
| 26 | 10.2.10 | 7.7.13 | Pra hi | 9 | ...... | Pûshâ. | Anushṭup, 1 and 4 Ushṇik. | 500 |
| 27 | 10.2.11 | 7.7.15 | Asat su | 24 | Vasukra Aindraḥ. | Indraḥ. | Trishṭup. | 503 |
| 28 | 10.2.12 | 7.7.20 | Visvo hi | 12 | Indra-Vasukrayoḥ 1 Indrasya snushâ. | saṁvâda aindraḥ. | The same. | 516 |
| 29 | 10.2.13 | 7.7.22 | Vane na | 8 | Vasukraḥ. | Indraḥ | ...... | 522 |
| 30 | 10.3.1 | 7.7.24 | Pra devatrâ | 15 | Kavasha Ailûshaḥ. | Âpaḥ or Apâṁnapât. | ...... | 527 |
| 31 | 10.3.2 | 7.7.27 | Â naḥ | 11 | The same. | Visve Devâḥ. | ...... | 534 |
| 32 | 10.3.3 | 7.7.29, 30 | Pra su gmantâ | 9 | ...... | Indraḥ. | 1–5 Jagatî, 6–9 Trishṭup. | 540 |

| ymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 33 | 10.3.4 | 7.8.1 | Pra mâ | 9 | Kavasha Ailûshaḥ. | 1 Visve Devâḥ, 2 and 3 Indraḥ, 4 and 5 Kurusravaṇasya Trâsadasyavasya dânastutiḥ, 6–9 Upamasravâ Mitrâtithiputraḥ. | 1 Trishṭup, 2 and 3 Pragâthaḥ, 4–9 Gâyatrî. | 545 |
| 34 | 10.3.5 | 7.8.3 | Prâvepâḥ | 14 | The same, or Aksho Maujavân. | Akshakṛishipraśaṁsâ (1, 7, 9, 12, 13) and akshakitavanindâ (2–6, 8, 10, 11, 14). | Trishṭup, 7 Jagatî. | 549 |
| 35 | 10.3.6 | 7.8.6 | Abudhram | 14 | Luso Dhânâkaḥ. | Visve Devâḥ. | 1–12 Jagatî, 13 and 14 Trishṭup. | 555 |
| 36 | 10.3.7 | 7.8.9 | Ushâsânaktâ | 14 | The same. | The same. | 1–12 Jagatî, 13 and 14 Trishṭup. | 561 |
| 37 | 10.3.8 | 7.8.12 | Namo mitrasya | 12 | Abhitapâḥ Sauryaḥ. | Sûryaḥ. | Jagatî, 10 Trishṭup. | 566 |
| 38 | 10.3.9 | 7.8.14 | Asmin naḥ | 5 | Indro Mushkavân. | Indraḥ. | Jagatî. | 571 |
| 39 | 10.3.10 | 7.8.15 | Yo vâm | 14 | Ghoshâ Kâkshîvatî. | Asvinau. | Jagatî, 14 Trishṭup. | 573 |
| 40 | 10.3.11 | 7.8.18 | Ratham yântam | 14 | The same. | The same. | Jagatî. | 580 |
| 41 | 10.3.12 | 7.8.21 | Samânam | 3 | Suhastyo Ghausheyaḥ. | ...... | The same. | 586 |
| 42 | 10.3.13 | 7.8.22 | Asteva | 11 | Kṛishṇaḥ. | Indraḥ. | Trishṭup. | 588 |
| 43 | 10.4.1 | 7.8.24 | Acchâ me | 11 | The same. | The same. | Jagatî, 10 and 11 Trishṭup. | 592 |
| 44 | 10.4.2 | 7.8.26 | Â yâtu | 11 | ...... | ...... | 1–3 Trishṭup, 4–9 Jagatî, 10 and 11 Trishṭup. | 597 |
| 45 | 10.4.3 | 7.8.28 | Divas pari | 12 | Vatsapriḥ. | Agniḥ. | Trishṭup. | 601 |

